तैलेनाभ्यञ्जमानस्तु धनायुर्भ्यां प्रहीयते ॥ २९१ ॥
अन्यायोपात्तवित्तस्य पतितस्य च वार्धुषेः ।
न स्नायादुदपानेषु स्नात्वा कृच्छ्रं समाचरेत् ॥ २९२ ॥
मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥ २९३ ॥
संक्रान्त्यां भानुवारे च सप्तम्यां राहुदर्शने ।
आरोग्यपुत्रमित्रार्थी न स्नायादुष्णवारिणा ॥ २९४ ॥
स गोहत्याकृतं पापं प्राप्नोत्येव न संशय ॥ २९५ ॥
षडोङ्कारं जपन्विप्रो गायत्रीं मनसा शुचिः ।
अनेकजन्मजैः पापैर्मुच्यते नात्र संशयः ॥ २९६ ॥
तिस्रो व्याहृतयः पूर्वषडोङ्कारसमन्वितः ।
पुनः संस्कृत्य चोङ्कारमन्त्रस्याद्यन्तयोस्तथा ॥ २९७ ॥
सौङ्कारचतुरावृत्य विज्ञेया सा शताक्षरा ।
शताक्षरां समावृत्य सर्ववेदफलं लभेत् ॥ २९८ ॥
एतया ज्ञातया नित्यं वाङ्मयं विदितं भवेत् ।
उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥ २९९ ॥
यथा योधन (?) हस्तेभ्यो राज्यं गच्छति धार्मिकः ।
एवं तिलसमायुक्तं जलं प्रेतेषु गच्छति ॥ ३०० ॥
एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्कृत्वा जलाञ्जलिम् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ ३०१ ॥
इहजन्मकृतं पापमन्यजन्मकृतं च यत् ।
अङ्गारकचतुर्दश्यां तर्पयंस्तद्व्यपोहति ॥ ३०२ ॥
न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना ।
नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत् ॥ ३०३ ॥
पिबतो यत्पतेत्तोयं भोजने मुखनिःसृतम् ।
अभोज्यं तद्भवेदन्नं भोक्ता भुञ्जीत किल्बिषी ॥ ३०४ ॥
पीतावशेषितं कृत्वा ब्राह्मणः पुनरापिबेत् ।
त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः ॥ ३०५ ॥

स्मृतिरत्नाकरे ।

चण्डालादेस्तु संस्पर्शे वारुणं स्नानमेव हि ।

इतराणि तु चत्वारि यथायोग्यं स्मृतानि हि ॥ ३०६ ॥
मनुष्यतर्पणे चैव स्नाने वस्त्रादिपीडने।
निवीतिस्तूभये विप्रस्तथा मूत्रपुरीषयोः ॥ ३०७ ॥
वस्त्रं त्रिगुणितं यस्तु निष्पीडयति मूढधीः।
वृथा स्नानं भवेत्तस्य यचैवादशमाम्बुभिः ॥ ३०८ ॥
और्ध्वपुंड्रो मृदा धार्यो यतिना च विशेषतः।
भस्मचन्दनगन्धादीन्वर्जयेद्यावदायुषा ॥ ३०९ ॥

निर्णयसिन्धौ।

अर्धरात्रादधस्ताचेत्संक्रान्तिग्रहणं तदा।
उपाकर्म न कुर्वीत परतश्चेन्न दोषभाक् ॥ ३१० ॥
एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥ ३११ ॥
पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः।
उपानयेऽधिकारी स्यात्पूर्वाभावे परः परः ॥ ३१२ ॥
जीवन्यदि समागच्छेद्घृतकुम्भे निमज्य च।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥ ३१३ ॥
सप्तम्यां भानुवारे च मातापित्रोर्मृतेऽहनि।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः ॥ ३१४ ॥
तैलाभ्यङ्गो नार्कवारे न भौमे
नो संक्रान्तौ वैधृतौ विष्टिषष्ठयोः।
पर्वस्वष्टम्यां च नेष्टः स इष्टः
प्रोक्तान्मुक्त्वा वासरे सूर्यसूनोः ॥ ३१५ ॥
स्नुषास्वस्त्रीयतत्पुत्रा ज्ञातिसंबन्धिबान्धवाः।
पुत्राभावे तु कुर्वीरन् सपिण्डान्तं यथाविधि ॥ ३१६ ॥
श्राद्धं करिष्यन्कृत्वा वा भुक्त्वा वापि निमन्त्रितः।
उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि ॥ ३१७ ॥
निमन्त्र्य विप्रांस्तदहर्वर्जयेन्मैथुनं क्षुरम्।
प्रमत्तानां च स्वाध्यायं क्रोधं शोकं तथानृतम् ॥ ३१८ ॥
मृन्मयं दारुजं पात्रमयःपात्रं च यद्भवेत्।
राजतं दैविके कार्ये शिलापात्रं च वर्जयेत् ॥ ३१९ ॥
अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदैहिकम्।

प्रायश्चित्तमसौ स्मार्तं कृत्वाग्नीनादधीत च ॥ ३२० ॥
द्वादशाहव्रतं चर्यात्रिरात्रमथवास्य तु ।
स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ॥ ३२१ ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् ।
अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ॥ ३२२ ॥
क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः ।
गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥ ३२३ ॥
दशाहस्यान्तरो यस्य गङ्गातोयेऽस्थि मज्जति ।
गयायां मरणं यादृक् तादृक्फलमवाप्नुयात् ॥ ३२४ ॥
द्वादशेऽहनि विप्राणामाशौचान्ते च भूभुजाम् ॥ ३२५ ॥
वैश्यानां तु त्रिपक्षाद्वाथवा स्यात्सपिण्डनम् ॥ ३२६ ॥

शूद्रकमलाकरे ।

विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ।
स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ॥ ३२७ ॥
संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते ।
संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः ॥ ३२८ ॥
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयन्निशाम् ॥ ३२९ ॥
भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते ।
मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥ ३३० ॥
शालके तत्सुते चैव सद्यः स्नानेन शुध्यति ॥ ३३१ ॥
षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ॥ ३३२ ॥
शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
अपरो नापितः प्रोक्तः शूद्रधर्माधिकोऽपि सः ॥ ३३३ ॥

व्यवहारमयूखे ।

प्रमादान्नाशितं दाप्यः समं हि द्रोहनाशितम् ।
न तु दाप्यो हृतं चोरैर्दग्धमूढं जलेन वा ॥ ३३४ ॥

श्राद्धमयूखे ।

शुक्लाः सुमनसः श्रेष्ठास्तथापद्मोत्पलानि तु ।
गन्धवन्त्योषधयुक्तानि ऋतुकालोद्भवानि च ॥ ३३५ ॥
जपादिकुसुमं झिण्टी रूपिका सकुरुण्टिका ।
पुष्पाणि वर्जनीयानि श्राद्धे कर्माणि नित्यशः ॥ ३३६ ॥

## प्रायश्चित्तमयूखे ।

पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥ ३३७ ॥
प्रथमेऽह्नि त्रिरात्रं स्याद्द्वितीये कृच्छ्रमेव तु ।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमेव च ॥ ३३८ ॥

## विवादभङ्गार्णवे ।

ब्रह्मदायागतां भूमिं हरेयुर्ब्राह्मणीसुताः ।
गृहं द्विजात्यः सर्वे तथा क्षेत्रं क्रमागतम् ॥ ३३९ ॥

---

( बृहन्मनुः )

## मिताक्षरायाम् ।

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥ ३४० ॥

## पाराशरमाधवीये ।

समानोदकभावस्तु निवर्तेताचतुर्दश ।
जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते ॥ ३४१ ॥
आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः ।
काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम् ॥ ३४२ ॥
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम् ।
आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत् ॥ ३४३ ॥
तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्न वा ॥ ३४४ ॥

## स्मृतिरत्नाकरे ।

त्रयोदश्यां तु सप्तम्यां चतुर्थ्यामर्धरात्रतः ।
अर्वाङ् नाध्ययनं कुर्यादिच्छेत्तस्य परायणम् ॥ ३४५ ॥
रात्रौ यामद्वयादर्वाग्यदि पश्येत्त्रयोदशीम् ।
सा रात्रिः सर्वकर्मघ्नी शङ्कराराधनं विना ॥ ३४६ ॥

## निर्णयसिन्धौ ।

असंबन्धा भवेन्मातुः पिण्डेनैवोदकेन वा ।
सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या ॥ ३४७ ॥
श्वशूद्रपतिताश्चान्त्या मृताश्चेद्द्विजमन्दिरे ।
शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा ॥ ३४८ ॥

दशरात्राच्छुनिमृते मासाच्छूद्रे भवेच्छुचिः।
द्वाभ्यां तु पतिते गेहमन्त्यो मासचतुष्टयात् ।। ३४९ ।।
अत्यन्तं वर्जयेद्देहमित्येवं मनुरब्रवीत् ।। ।। ३५० ।।

## शूद्रकमलाकरे ।

जीवञ्जातो यदि ततो मृतः सूतकमेव तु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ।। ३५१ ।।

## प्रायश्चित्तमयूखे ।

मातुर्मातृगमने पितुर्मातृगमने तथा ।
एतास्त्वकामतो गत्वा द्विजश्चान्द्रायणं चरेत् ।। ३५२ ।।

## विवादभङ्गार्णवे ।

देशनामनदीभेदान्निकटेऽपि भवेद्यदि ।
तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयंभुवा ।। ३५३ ।।
दशरात्रेण या वार्ता यत्र न श्रूयतेऽथवा ।
गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः ।। ३५४ ।।
एकोदरे जीवति तु सापत्नो न लभेद्धनम् ।
स्थावरेऽप्येवमेव स्यात्तदभावे लभेत वै ।। ३५५ ।।

---

## परिशिष्टं समाप्तम् ।

---

# मनुस्मृतिश्लोकानामकाराद्यनुक्रमणी ।

## आ

मनुस्मृतेः श्लोकानुक्रमणी

समाप्ता।

# MANUSMṚTI

With the Sanskrit Commentary
Manvartha-Muktāvalī of Kullūka Bhaṭṭa

Manu is variously referred to as the father of human race, as one of the ancient sages, as having established fire, as a semi-divine being who received from God Himself the laws and regulations, as a king in the Kṛta-yuga, as the author of a work on Arthaśāstra. In the Manu Smṛti Manu is referred to as a king.

Manu's work has been held in high esteem. Such remarks as "मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते," "मनुर्वैयत् किञ्चाह तद् भेषजम्" testify to the importance traditionally attached to this smṛti since early times. The work of Manu is an epitome of the ancient culture of India.

Comprising twelve chapters, the Manu Smṛti deals with the usual Smṛti topics which can be divided into four classes, viz. Ācāra, Prāyaścitta, Vyavahāra and Rājadharma.

Kullūka's commentary combines the merits of brevity and lucidity. It is by far the most well-known and most widely read.

---

**MOTILAL BANARSIDASS**
*Delhi Varanasi Patna Chennai Bangalore Calcutta Pune Mumbai*

ISBN: 81-208-0765-0 (Cloth) Rs. 475
ISBN: 81-208-0766-9 (Paper) Rs. 375